मिथिला की प्राचीन लिपि मिथिलाक्षर में लिखित रामनवमी पूजा पद्धति में सबसे पहले सम्पूर्ण पूजा में दिन दिन देवताओं की पूजा होती है, उसकी सूची दी गयी है, जिसे देखने पर उस सम्पूर्ण पद्धति की झलक मिल जाती है।

(1) राम
(2) सीता
(3) लक्ष्मण
(4) दशरथ
(5) कौशल्या
(6) कैकेयी
(7) सुमित्रा
(8) भरत
(9) शत्रुघ्न
(10) सुग्रीव
(11) हनुमान्
(12) जाम्बवान्
(13) विभीषण
(14) अंगद
(15) नल
(16) नील
(17) धृष्ट
(18) जय
(19) विजय
(20) सुराष्ट्र
(21) राष्ट्र
(22) कोपन
(23) अकोपन
(24) सुमन्त्र
(25) इन्द्रादिदशदिक्पाल
(26) अनन्त
(27) ब्रह्मा

ततोऽत्र पूजयेत् पुष्पाक्षतैः **ॐ वज्राय नमः, ॐ शक्त्यै नमः, ॐ दण्डाय नमः, ॐ शङ्खाय नमः, ॐ पाशाय नमः, ॐ गदाय नमः, ॐ शूलाय नमः, ॐ चक्राय नमः, ॐ पद्माय नमः, ॐ अङ्कुशाय नमः। ततः सूर्यादिनवग्रहाः इति।**

अथ घृतदीपम्।

नमोऽस्यां रात्रौ चैत्रशुक्लरामनवम्यां सकलपापविनर्म्मुक्तिपूर्व्वकज्योतिष्मद् विमानकरणकविष्णुलोकगमनकामनयामुं घृतदीपं श्रीरामचन्द्रायाहन्ददे।।

प्राणप्रतिष्ठामन्त्रः। **ॐ मनोजूतिर्जुषता...। श्रीरामचन्द्र साङ्गसायुधसवाहनसपरिवार इह सुप्रतिष्ठितो भव।** इति

छन्दोगानां प्राणप्रतिष्ठा **ॐ वाङ्मनः प्राणापानो व्यान चक्षुः श्रोत्रं शर्म्मवर्म्मभूतिः प्रतिष्ठा ॐ श्रीरामचन्द्र साङ्गसायुधसवाहनसपरिवार इह सुप्रतिष्ठितो भव।।**

पुष्पाञ्जलिं गृहीत्वोपविश्य–

नमो नमस्ते देवेश सुरासुरपते जय।
जय कामद भक्तानां जय दाशरथे प्रभो।।
जय सीतापते नाथ जय भग्नेश कार्मुक।
जब ब्रह्माण्डखण्डेश जय रावणमर्द्दन।।

जय बालिकपीशघ्न जय सुग्रीवराज्यद।
जय द्विजगणानन्द जय वायुसुतप्रिय॥
इति संकीर्त्य देवेशं प्रणिपत्य पुनः पुनः।
सर्वान् कामानवाप्नोति ततो मोक्षमवाप्नुयात्॥
एष पुष्पाञ्जलिः नमो भगवते श्रीरामचन्द्राय नमः॥
॥ श्रीरामचन्द्राय नमः॥

## अथ रामनवमीपूजाविधिः

मृण्मयीं प्रतिमां विधाय **ॐ रामोऽसीति** नाम कृत्वा **ॐ मनोजूति**रित्यादिमन्त्रेण प्रतिष्ठां कृत्वा रामं ध्यायेत्-

कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम्।
दक्षिणांशे दशरथं पुत्रावेक्षणतत्परम्॥
पृष्ठतो लक्ष्मणन्देवं सच्छत्रं कनकप्रभम्।
पार्श्वे भरत शत्रुघ्नौ तालवृन्तकरावुभौ।
अग्रेप्यग्रं हनूमन्तं रामानुग्रहकांक्षितम्।

एवं ध्यात्वा प्रतिमां स्वशाखोक्तविधिना संस्थापयेत्।

ॐ इन्द्राग्निर्यमश्चैव विर्ऋतोवरुणोऽनिलः।
कुबेर ईशो ब्रह्मा च दिक्पालाः स्नापयन्तु ते॥

इत्यनेन स्नापयेत्।

ततो यवमादाय **ॐ ह्रौं श्रीं महावीर समरवीरपते श्रीरामचन्द्र इहागच्छ इह तिष्ठ** इत्यावाह्य स्थापयित्वा फल-पुष्पाम्बुसम्पूर्ण-चूलाशोक-तुलसीदल-संयुक्तमुज्ज्वलं शङ्खं गृहीत्वा।

दशग्रीवविनाशाय जातोऽसि रघुनन्दन।
गृहाणार्घ्यं मया दत्तं प्रसीद परमेश्वर॥

एषोऽर्घ्यः भगवते श्रीरामचन्द्राय नमः।

सुगन्धिचन्दनं दिव्यं कर्प्पूरादिमिश्रितम्।
सीतया भार्य्यया सार्द्धं रक्षोघ्नं परिगृह्यताम्॥

इदमनुलेपनं भगवते श्रीरामचन्द्राय नमः।

पुष्पमादाय

पुष्पन्तु परं दिव्यं पुण्यं सुरभिसंयुतम्।
गृहाण परया भक्त्या मया दत्तं जगत्पते॥

इदं पुष्पं भगवते श्रीरामचन्द्राय नमः।

ततो यज्ञोपवीतमादाय

श्रीरामविबुधाधीश सुरासुरवरप्रद।
यज्ञोपवीतं मद्दतं परिधत्स्व रघुनन्दन॥
इमे यज्ञोपवीते वृहस्पतिदैवते भगवते श्री रामचन्द्राय नमः।
ततो वासोयुगलमादाय
ॐवासो युगं गृहाणेश तन्तुसन्तानकल्पितम्।
सीतया भार्य्यया सार्द्धं रक्षोघ्नं परिधीयताम्॥
इमे वासोयुगे बृहस्पति दैवते भगवते श्रीरामचन्द्राय नमः।
ॐरामचन्द्र सुरश्रेष्ठ जानक्या भ्रातृभिः सह।
पूजितोऽसि मया देव धूपोऽयं प्रतिगृह्यताम्॥
एष धूपः भगवते श्रीरामचन्द्राय नमः।
ॐ मारीचघ्न महाबाहो सङ्ग्रामव्यसन प्रभो।
दीपोऽयं गृह्यतां देव त्रैलोक्यध्वान्तनाशनः।
एष दीपः भगवते श्रीरामचन्द्राय नमः।
इदं ताम्बूलं भगवते श्रीरामचन्द्राय नमः।
नैवेद्यं फल पक्वान्नं शर्क्कराघृतपाचितम्।
गृहाण जगतां सर्व्वैर्बन्धुजनैस्सह॥
एतानि नैवेधानि ॐ भगवते श्रीरामचन्द्राय नमः।
ॐ नमस्ते पुण्डरीकाक्ष त्राहि मां भवसागरात्।
सर्वपापप्रणाशार्थं दण्डवत् प्रणमाम्यहम्॥
इत्यनेन दण्डवत् प्रणामं कुर्य्यात्।
ॐ यानि कानि कृतानीह पापानि मम जन्मनि।
तानि तानि प्रणश्यन्ति प्रदक्षिण पदे पदे।
अनेन मन्त्रेण प्रदक्षिणं कुर्य्यात्। ततः उपविश्य पठेत्।
ॐ नमस्ते देव देवेश सुरासुरपते जय।
जय कामद भक्तानां जय दाशरथे प्रभो॥
जय सीतापते नाथ जय भग्नेशकार्मुक।
जय ब्रह्माण्ड खण्डेश जय रावणमर्द्दन॥
जय बालीकपीशघ्न जय सुग्रीवराज्यद।
जय द्विजगणानन्द जय वायुसुतप्रिय॥
इति संकीर्त्य देवेशं प्रणिपत्य पुनः पुनः।
सर्वान् कामानवाप्नोति ततो मोक्षमवाप्नुयात्॥
एष पुष्पाञ्जलिः नमो भगवते श्रीरामचन्द्राय नमः।
ततः सीतापूजा।

**ॐ सीते इहागच्छ इह तिष्ठ** इत्यावाह्य

ॐ दशाननविनाशाय जाता धरणिसंभवा।
मैथिली शीलसम्पन्ना पातु नः पतिदेवता।।

एषोऽर्घ्यः ॐ सीतायै नमः। इदमनुलेपनम्। इदं सिन्दूरम्। इदमक्षतम्। इदं पुष्पम्। एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि ॐ सीतायै नमः।

ततो **लक्ष्मण इहागच्छ इह तिष्ठ इत्यावाह्य**

ॐ निहतो रावणिर्य्येन शक्रजिच्छत्रुघातिना।
सः पातु लक्ष्मणो धन्वी सुमित्रानन्दवर्द्धन।।

एषोऽर्घ्यः भगवते श्री लक्ष्मणाय नमः।

ततोऽष्टदल मध्ये पूर्वदले **ॐ दशरथ इहागच्छ इह तिष्ठेत्यावाह्य**

ॐ नानाविधगुणागार गृहाणार्घ्यं नृपोत्तम।
रविवंशप्रदीपाय नमो दशरथाय वै।

एषोऽर्घ्यः दशरथाय नमः।

एवं गन्धादिना पूजयेत्। आग्नेय दले कौशल्यामावाहयेत्।

ॐ कौशल्ये इहागच्छ इह तिष्ठ।

ॐ गृहाणार्घ्यं मयादेवि रम्ये दशरथप्रिये।
जगदानन्दवन्द्यायै कौशल्यायै नमो नमः।।

**एषोऽर्घ्यः कौशल्यायै नमः। इदमनुलेपनम्। इदं सिन्दूरम्। इदमक्षतम्।** इत्यादिना पूजयेत्।

याम्यदले **कैकेयि इहागच्छ इह तिष्ठ।**

ॐ दृढप्रतिज्ञे कैकेयि मातर्भरतवन्दिते।
गृहाणार्घ्यं महादेवि रक्ष मां भक्तवत्सले।।

**एषोऽर्घ्यः कैकेय्ये नमः। इदमनुलेपनम्। इदं सिन्दूरम्। इदमक्षतम्।** इत्यादिना पूजयेत्।

नैर्ऋत्यदले **सुमित्रे इहागच्छ इह तिष्ठ।**

ॐ शुभलक्षण सम्पन्ने लक्ष्मणानन्दकारिणि।
सुमित्रं देहि मे देवि सुमित्र्यै वै नमो नमः।।

एषोऽर्घ्यः सुमित्रायै नमः। एवं गन्धादिना पूजयेत्।

पश्चिमदले **भरत इहागच्छ इह तिष्ठ।**

ॐ भक्तवत्सल भक्त्यात्म रामभक्तिपरायण।
भक्त्या दत्तं गृहाणार्घ्यं भरताय नमो नमः।।

**ॐ एषोऽर्घ्यः ॐ भरताय नमः। इदमनुलेपनेम्। एते तिलाः। इदं पुष्पम्।** एवं पूजयेत्।

ततः वायव्यदले **शत्रुघ्न इहागच्छ इह तिष्ठ।**

ॐ लवणान्तक शत्रुघ्न शत्रुकाननपावक।
गृहाणार्घ्यं मया दत्तं प्रसीद कुरु मे शुभम्।।

**एषोऽर्घ्यः ॐ शत्रुघ्नाय नमः।** एवं गन्धादिना पूजयेत्।

उत्तरदले **सुग्रीव इहागच्छ इह तिष्ठ।**

ॐ सुग्रीवाय नमस्तुभ्यं दशग्रीवान्तकप्रिय।
गृहाणार्घ्यं महावीर किष्किन्धानायक प्रभो।।

एषोर्घ्यः ॐ सुग्रीवाय नमः।

ईशानदले **ॐ हनुमन्निहागच्छ इह तिष्ठ।**

ॐ कूर्मकुम्भीव संकीर्णमुत्तीर्णोऽसि महार्णवम्।
हनूमते नमस्तुभ्यं गृहाणार्घ्यं महामते।।

**एषोर्घ्यः ॐ हनुमते नमः।** एवं चन्दनादिना पूजयेत्।

**ततो विभीषण इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ विभीषणाय नमः।** इति पूजयेत्।

**ॐ जाम्बवान् इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ जाम्बवते नमः** इति पूजयेत्।

**ॐ अंगद इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ अङ्गदाय नमः।** एवं पूजयेत्।

**ॐ नल इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ नलाय नमः।** एवं पूजयेत्।

**ॐ नील इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ नीलाय नमः।** एवं पूजयेत्।

ततोऽष्टदलमध्ये **धृष्टे इहागच्छ इह तिष्ठ। एषोऽर्घ्यः धृष्ट्यै नमः।**

ॐ जय इहागच्छ इह तिष्ठ। एषोऽर्घ्यः जयाय नमः।

ॐ विजय इहागच्छ इह तिष्ठ।

ॐ सुराष्ट्र इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ सुराष्ट्राय नमः।

ॐ राष्ट्रवर्द्धन इहागच्छ इह तिष्ठ। एषोऽर्घ्यः राष्ट्रवर्द्धनाय नमः।

ॐ अकोपन इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ अकोपनाय नमः।

ॐ धर्मपाल इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ धर्मपालाय नमः।

ॐ सुमन्तो इहागच्छ इह तिष्ठ। एषोर्घ्यः ॐ सुमन्ताय नमः।

दलाग्रे **ॐ लोकपाल इहागच्छ इह तिष्ठ। एषोर्घ्यः लोकपालाय नमः।** एवं संपूजयेत्।

ॐ इन्द्र इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ इन्द्राय नमः। एवं पूजयेत्।

ॐ अग्ने इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ अग्नये नमः। ...

निर्ऋतिवरुणयोर्म्मध्येऽनन्तपूजा। **ॐ अनन्त इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ अनन्ताय नमः।**

इन्द्रेशानयोर्म्मध्ये **ब्रह्मन् इहागच्छ इह तिष्ठ। एषोऽर्घ्यः ॐ ब्रह्मणे नमः।**

ततोऽस्त्राणि पूजयेत्। **ॐ वज्राय नमः। ॐ शक्त्यै नमः। ॐ दण्डाय नमः ॐ खड्गाय नमः। ॐ पाशाय नमः। ॐ अङ्कुशाय नमः। ॐ गदायै नमः। ॐ शूलाय नमः। ॐ चक्राय नमः। ॐ पद्माय नमः।** पुष्पाक्षतैः पूजयेत्।

**ॐ सूर्यादिनवग्रहाः इहा गच्छत इह तिष्ठत। एषोऽर्घ्यः ॐ सूर्यादिनवग्रहेभ्यो नमः।** इति गन्धादिभिः पूजयेत्। प्रभात समये विसर्ज्जनम् कुर्यात्।

तद्यथा–

देवदेव महाबाहो दशग्रीवनिकृन्तन।
गृहीत्वा मत्कृतां पूजां स्वस्थानं गच्छ ते नमः।।
मम कृतां देव पूजां सौभाग्यसुखदान्तथा।
गृहीत्वा गच्छ स्वस्थानमपराधं क्षमस्व मे।।
न्यूनाधिकं च यत्किञ्चिन्नवम्यां च यत्कृतम्।
कृपां मयि विधायेत्थं क्षमस्व पुरुषोत्तम।।
रामचन्द्र सुराधीश वैकुण्ठं व्रज पार्थिव।
पूजां मदीयामादाय मम स्वस्तिकरो भव।।
ॐ रूपन्देहि यशो देहि भाग्यं भगवन् देहि मे।
धर्मान्देहि धनन्देहि सर्वान् कामान् प्रदेहि मे।।

इति प्रणमेत्।

यान्तु देवगणाः सर्वे पूजामादायमामकीम्।
इष्टकामप्रसिद्धर्थं पुनरागमनाय च।।

**श्रीरामचन्द्र पूजितोऽसि प्रसीद** इति विसर्ज्जयेत्।

ततो **लक्ष्मणादयो देवाः पूजिताः स्थः क्षमै'रामिति** तान् विसर्ज्जयेत्।

ॐ अद्य कृतैतद्रामनवम्यां ससीतश्रीरामलक्ष्मणादिपूजनप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे।

मृण्मयीञ्च महानद्यां विसर्ज्जयेत्। ततः स्नात्वा नित्यं च विधाय ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणान्दत्वा स्वयं भुञ्जीत इति पूजाविधिः।



# अथ कथा

**प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः।**
**उपोषणं न कुरुते कुम्भीपाकेषु पच्यते।।1।।**

श्रीरामनवमी का दिन आने पर जो मूर्ख मनुष्य उपवास नहीं करते हैं, वे कुम्भीपाक नरक में पचते हैं।

**यत्किंचिद्राममुद्दिश्य नो ददाति स्वशक्तितः।।**
**रौरवेषु स मूढात्मा पच्यते नात्र संशयः।।2।।**

अपनी शक्ति के अनुसार जो कुछ श्रीराम को लक्ष्य कर दान नहीं करता है, वह मूर्ख रौरव नरक में पचता है, इसमें सन्देह नहीं।

**पीताम्बराणि देवाय प्रार्थितान्यर्पयेत्सुधीः।**
**स्वर्णयज्ञोपवीतानि दद्याद्देवाय शक्तितः॥3॥**

विद्वान् यजमान पीले वस्त्रों की प्रार्थना कर देवता को अर्पित करे। स्वर्ण-निर्मित यज्ञोपवीत आदि भी देवता को समर्पित करे। नाना प्रकार के रत्नों से जड़े हुए आभूषण भी समर्पित करें।

**नानारत्नविचित्राणि दद्यादाभरणानि च।**
**हिमांशुघृष्टरुचिरघनसारसमन्वितम् ॥4॥**
**गन्धं दद्यात्प्रयत्नेन चागुरं च सकुङ्कमम्।**
**मूलमन्त्रेण सकलानुपचारान्प्रकल्पयेत्॥5॥**

कुंकुम तथा अगर से युक्त गन्ध समर्पित करें। सभी उपचार मूलमन्त्र से कल्पित करें।

**कह्लारकेतकीजातीपुन्नागाद्यैः प्रपूजयेत्।**
**चम्पकैः शतपत्रैश्च सुगन्धैः सुमनोहरैः॥6॥**

सुगन्धित एवं सुन्दर कमल, केतकी, जाती, नागकेसर, चम्पा, शतपत्र के पुष्पों से पूजन करें।

**घण्टां च वादयन् धूपं दीपं चास्मै समर्पयेत्।**
**भक्ष्यभोज्यादिकं भक्त्या देवाय विधिनार्पयेत्॥7॥**

घण्टा बजाते हुए धूप, दीप, भक्ष्य, भोज्य आदि पदार्थ देवता को विधिपूर्वक समर्पित करें।

**एवं सोपस्करं देवं दत्वा पापैः प्रमुच्यते।**
**जन्मकोटिकृतैः घोरैर्नानारूपैः सुदारुणैः॥8॥**
**विमुक्तस्तत्क्षणादेव राम एव भवेन्मुने।**

इस प्रकार उपकरणों के साथ देवता को समर्पित कर अनेक प्रकार के दारुण, करोड़ों जन्मो में किये गये पापों से वह उसी समय मुक्त होकर श्रीराम का स्वरूप प्राप्त कर लेता है।

**श्रद्धधानस्य ते प्रोक्तं श्रीरामनवमीव्रतम्॥9॥**
**सर्वलोकहितार्थाय पवित्रं पापनाशनम्।**

हे मुनि! आप श्रद्धावान् हैं, इसलिए मैंने सभी लोगों के कल्याण के लिए पवित्र और पापों का नाश करनेवाले श्रीरामनवमी व्रत के बारे में बतलाया।

**लौहेन निर्मितं चापि शिलया दारुणापि वा॥10॥**
**येन केन प्रकारेण यस्मै कस्मै क्रमान्मुने।**
**चैत्रशुक्लनवम्यां तु दत्वा विप्राय भक्तितः॥11॥**
**सर्वपापविनिर्मुक्तो भवेदेव न संशयः।**

श्रद्धालु लोहा, पत्थर अथवा काष्ठ की बनी हुई प्रतिमा जिस किसी भी प्रकार से, जिस किसी ब्राह्मण को, विधानपूर्वक चैत्र शुक्ल नवमी तिथि को दान कर सभी पापों से मुक्त होता ही है, इसमें सन्देह नहीं।

**तस्मिन् दिने महापुण्ये स्नानदानादिकं मुने॥12॥**
**कृतं सर्वप्रयत्नेन यत्किञ्चिदपि भक्तितः।**

**महादानादितुल्यं स्याद्रामोद्देशेन यत्कृतम्॥ 13॥**
**वित्तसाठ्यन्न कर्तव्यं सर्वं कुर्यात्स्वभक्तितः।**

उस महान् पुण्यमय दिन में जो कुछ भी स्नान, दान आदि भक्ति एवं यत्नपूर्वक किया जाता है, वह अक्षय्य होता है। श्रीराम के उद्देश्य से जो कुछ भी किया जाता है वह महादान आदि के समान फलदायी होता है। अपनी सम्पत्ति की अनदेखी न करते हुए अपनी शक्ति के अनुसार सबकुछ करना चाहिए।

**तस्मिन् दिने महापुण्ये स्नानदानादिकं मुने॥14॥**
**कृतं सर्वप्रयत्नेन यत्किञ्चिदपि भक्तितः।**
**तस्मिन् दिने महापुण्ये प्रातरारभ्य भक्तितः॥15॥**
**जपेदेकान्त आसीनो यावत्स्याद्दशमीदिनम्।**

हे मुनि, उस पुण्यमय दिन में स्नान एवं दान कर हर प्रकार से अपनी भक्ति के द्वारा सबकुछ सम्पन्न कर प्रातःकाल से आरम्भ कर एकान्त में बैठकर जबतक दशमी तिथि रहे, तबतक जप करें।

**तेनैव स्यात्पुरश्चर्या दशम्यां भोजयेद् द्विजान्॥16॥**
**भक्ष्यभोज्यैर्बहुधैर्दद्याच्छक्त्या च दक्षिणाम्।**
**कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति॥17॥**

उसी मन्त्र से पुरश्चरण किया जाना चाहिए, दशमी में अनेक प्रकार के भक्ष्य-भोज्य पदार्थों से ब्राह्मण-भोजन करना चाहिए और शक्ति के अनुसार दक्षिणा दी जानी चाहिए। इससे वह व्यक्ति कृतकृत्य हो जाता है; उसपर श्रीराम तुरत प्रसन्न होते हैं।

**तूष्णींतिष्ठन्नरो याति पुनरावृत्तिवर्जितः।**
**द्वादशाब्दशतेनापि यत्पापं नापपद्यते॥18॥**
**विलयं याति तत्सर्वं श्रीरामनवमीदिने।**
**मुमुक्षवोऽपि सदा राम श्रीरामनवमीव्रतम्॥ 19॥**
**न त्यजन्ति सुरश्रेष्ठो देवेन्द्रोऽपि विशेषतः।**

रामनवमी के दिन जो मौनव्रत धारण करते हैं उन्हें मोक्ष मिलता है साथ ही, बारह वर्षों में जो पाप नहीं कट पाता है वह पाप भी लुप्त हो जाता है। हमेशा मोक्ष की कामना करनेवाले भी श्रीरामनवमी का व्रत नहीं छोड़ते हैं। विशेष रूप से देवताओं में श्रेष्ठ देवराज इन्द्र भी रामनवमी व्रत नहीं छोड़ते हैं।

**तस्मात्सर्वात्मना सर्वे कृत्वैव नवमीव्रतम्॥20॥**
**मुच्यते सर्वपापेभ्यो यान्ति ब्रह्म सनातनम्।**

अतः सबलोग सभी प्रकार से नवमी व्रत करके ही सभी पापों से मुक्त हो जाते हैं और सनातन ब्रह्म को प्राप्त करते हैं।

**अथ पूजां प्रवक्ष्यामि ब्रह्मोक्तां सुरपूजिताम्॥21॥**

अब मैं ब्रह्मा के द्वारा कही गयी उस पूजाविधि को कहता हूँ, जिससे देवों ने श्रीराम की पूजा की थी।

**सीते देवि नमस्तुभ्यं रामचन्द्रप्रिये सदा।**
**गृहाणार्घ्यं मया दत्तं वरदा भव शोभने॥22॥**

हे सीते, हे श्रीराम की प्रिये, आपको प्रणाम। मेरे द्वारा दिये गये अर्घ्य को स्वीकार करें तथा हे सुन्दरि मुझे वर प्रदान करें।

**कौशल्ये प्रणमामि त्वां राममातः सुशोभने।**
**अदिते त्वं गृहाणार्घ्यं वरदा भव सर्वदा॥23॥**

हे कौशल्या, आप श्रीराम की माता अदिति-स्वरूपा हैं। मैं आपको प्रणाम करता हूँ। मेरे द्वारा दिये दये अर्घ्य को ग्रहण कर हमेशा वर प्रदान करते रहें।

**कैकेयि प्रणमामि त्वां रावणस्यान्तकारिणि।**
**गृहाणार्घ्यं मया दत्तं वरदा भव शोभने॥24॥**

हे कैकेयि, आप रावण का अन्त करने में निमित्त हैं। आप मेरा दिया हुआ अर्घ्य धारण करें तथा हे शोभने, मुझे वर प्रदान करें।

**सुमित्रे त्वां नमस्यामि शेषमातर्नमोऽस्तु ते।**
**गृहाणार्घ्यं मया दत्तं वरदा भव शोभने॥25॥**

हे सुमित्रा, आप शेषावतार लक्ष्मण की माता हैं, आपको प्रणाम। मेरे द्वारा दिये गये अर्घ्य को ग्रहण करें तथा हे शोभने, मुझे वर प्रदान करें।

**अजपुत्र महाबाहो श्रीमद्दशरथ प्रभो।**
**गृहाणार्घ्यं मया दत्तं रामतात नमोऽस्तु ते॥26॥**

हे विशाल भुजाओं वाले, हे अज के पुत्र, श्रीमान् दशरथ, हे प्रभु, हे श्रीराम के पिता, मेरे द्वारा दिये गये अर्घ्य को ग्रहण करें।

**सीतापते नमस्तुभ्यं रावणस्यान्तक प्रभो।**
**गृहाणार्घ्यं मया दत्तं कौशल्यानन्दवर्द्धन॥27॥**

हे सीतापति श्रीराम, हे प्रभु, आप रावण का अन्त करनेवाले हैं। कौशल्या का आनन्द बढानेवाले, मेरे द्वारा दिये गये अर्घ्य को रहण करें।

**दाशरथे नमस्यामि रामभक्तिन् नृपात्मज॥**
**मया समर्पितं तुभ्यमर्घ्यं प्रतिगृह्यताम्॥28॥**

हे दशरथ के पुत्र, हे राजपुत्र, श्रीराम में भक्ति रखनेवाले भरत, मेरे द्वारा दिये गये अर्घ्य को ग्रहण करें।

**लक्ष्मण त्वं महाबाहो इन्द्रजिद्वधकारक।**
**गृहाणार्घ्यं मया दत्तं रामभक्तिं प्रयच्छ मे॥29॥**

हे लक्ष्मण, हे महाबाहु, मेघनाद का वध करनेवाले, मेरे द्वारा दिये गये अर्घ्य को स्वीकार कर मुझे श्रीराम के प्रति भक्ति प्रदान करें।

**लब्ध्वा सुतौ त्वया राम प्राप्तं सुखमनूत्तमम्।**
**तथा मां सुखितं देव कुरुष्व त्वां नमाम्यहम्॥30॥**

हे श्रीराम, आपने दो पुत्रों को प्राप्त कर जिस अनुपम सुख का लाभ किया, उसी प्रकार मुझे भी सुखी करें। मैं आपको प्रणाम करता हूँ।

**अवतीर्य्य त्वया देव वायुपुत्रासुरान्तक।**
**अवतारय मां भक्तं भवसिन्धुसुदुस्तरात्॥31॥**

हे वायुपुत्र हनुमान्, हे असुरों का संहार करनेवाले, आपने तो स्वयं पार पा लिया, अब मुझे इस दुस्तर भवसागर को पार करावें।

**पापिनो हि नो रामं प्राप्यन्ते चात्र संशयः।**

इस प्रकार पूजा करने से लोग श्रीराम को पा लेते हैं, इसमें कोई संशय नहीं।

**चैत्रशुक्लनवम्यान्तु भुजन्ते ये नराधमाः।32।**
**पच्यन्ते रौरवे घोरे विष्णुना भाषितं पुरा॥**

चैत्र मास के शुक्ल पक्ष की नवमी तिथि को जो अधम व्यक्ति भोजन करते हैं, वे रौरव नामक नरक में पचते रहते हैं, ऐसा भगवान् विष्णु ने स्वयं कहा है।

**नवमी चैत्रमासस्य पुनर्वसुयुता भवेत्॥33॥**
**उपवासः सदा देव अश्वमेधशताधिकः॥**

हे देव, चैत्र मास की नवमी तिथि को यदि पुनर्वसु नक्षत्र हो तब उस दिन उपवास करने सौ अश्वमेध यज्ञ करने का फल होता है।

**बुधवारो भवेत्तत्र अतिगण्डस्तथैव च॥34॥**
**पूजयन्ति तथा रामं यान्ति ब्रह्म सनातनम्।**
**मुमुक्षुणापि कर्तव्यं गृहस्थेनापि वा पुनः॥35॥**

यदि बुधवार हो और अतिगण्ड योग हो तो उस दिन श्रीराम की पूजा करने से शाश्वत ब्रह्म की प्राप्ति होती है। मोक्ष के इच्छुक तथा गृहस्थ को भी इस दिन पूजा करनी चाहिए।

**क्षत्रियेण च वैश्येन शूद्रेणापि महामुने।**
**चाण्डालेनापि कर्तव्यं व्रतमेतदनुत्तमम्॥36॥**

हे महामुनि, क्षत्रिय, वैश्य तथा शूद्र तथा चाण्डाल के द्वारा भी इस उत्तम व्रत को करना चाहिए।

**व्रतं ये नैव कुर्वन्ति मानवाः काममोहिताः।**
**ते यान्ति नरकं घोरं शतकल्पावधि ध्रुवम्॥37॥**

जो मनुष्य भाग-विलास से प्रेरित होकर इस दिन व्रत नहीं करते हैं, वे सौ कल्पों तक घोर नरक में जाते हैं।

**भ्रूणहत्या च यत्पापं सुरापानाच्च यद् भवेत्।**
**तत्पापं कोटिगुणितं जयन्त्यां भोजनाद् भवेत्॥ 39॥**

भ्रूण हत्या का जो पाप होता है, मदिरा पीने का जो पाप होता है उसका करोड़ों गुना पाप श्रीराम के जन्मदिन में भोजन करने से होता है।

गवां वधे च यत्पापं स्त्रीवधे यत्प्रजायते।
कृतघ्नस्यापि यत्पापं संसारे संभवेन्मुने॥40॥
तत्पापं कोटिगुणितं जयन्त्यां भोजनाद् भवेत्॥

इस संसार में गो-हत्या के वध का पाप होता है, स्त्रीहत्या के वध का जो पाप होता है और किये गये उपकार को न माननेवाले को जो पाप होता है, उन पापों का करोड़ों गुना पाप जयन्ती के दिन भोजन करने से होता है।

काकमांसं गवीमांसं शुनश्यापि नरस्य च॥41॥
भक्षयित्वा च यत्पापं जयन्तीभोजनाद् भवेत्।

कौए का मांस, नीलगाय का मांस, कुत्ते का मांस खाने से मनुष्य को जो पाप होता है वही पाप जयन्ती के दिन भोजन करने से होता है।

ये कुर्वन्ति नरा नित्यं जयन्तीव्रतमुत्तमम्॥42॥
कुलकोटिसमायुक्तं यान्ति ब्रह्म सनातनम्।
तस्मात्सर्वप्रयत्नेन व्रतमेतत् समाचरेत्।
अकुर्वन् यान्ति निरयं सत्यं सत्यं वदाम्यहम्॥43॥

जो व्यक्ति इस उत्तम जयन्ती व्रत को करते हैं वे कुल के करोड़ों व्यक्ति साथ शाश्वत ब्रह्मलोक जाते हैं। इसलिए हर तरह का यत्न कर इस व्रत को करना चाहिए। नहीं करने से नरक जोते हैं- ऐसा मैं सत्य कहता हूँ।

अगस्तिरुवाच
पूजाविधानं वक्ष्यामि कथितं नारदेन यत्।
वाल्मीकाय मुनीन्द्राय द्वारपूजादिकं तथा॥4॥
आकर्णय मुनिश्रेष्ठ सर्वाभीष्टफलप्रदम्।

अगस्ति बोले- हे मुनिश्रेष्ठ, वाल्मीकि को नारद मुनि ने जो पूजा-विधान एवं द्वार-पूजा आदि का विधान बतलाया था वह मैं आपसे कह रहा हूँ। हे मुनिश्रेष्ठ आप इसे सुनें। यह सभी मनोवांछित फल को देनेवाला है।

श्रीरामद्वारपीठाङ्गपरिवारतया स्थिताः॥45॥
ये प्रोक्तास्तानिह स्तौमि तन्मूलाः सिद्धयो यतः।

श्रीराम के द्वार में पीठ पर अंग के रूप में तथा परिवार के रूप में जिन जिन देवताओं के नाम कहे गये हैं, उन्हें यहाँ प्रणाम करता हूँ, क्योंकि उन्हीं के कारण सिद्धियाँ मिलती हैं।

वंदे गणपतिं भानुं तिलकस्वामिनं शिवम्॥46॥
क्षेत्रपालं तथा धात्रीं विधातारमनन्तरम्।
गृहाधीशं गृहं गङ्गायमुनाकुलदेवताम्॥47॥
प्रचण्डचण्डा च तथा शंखपद्मनिधी अपि।

**वास्तोष्पतिं द्वारलक्ष्मीगुरुं वागधिदेवताम्॥48॥**

**एता वै द्वारदेवताः पूज्याः।**

गणेश, सूर्य, तिलकस्वामी, शिव, सभी क्षेत्रपाल, माताएँ और तब ब्रह्मा की पूजा करनी चाहिए। गृहपति, गृह, गंगा, यमुना, कुलदेवता, प्रचण्ड, चण्ड, शंख एवं पद्म ये दो निधियाँ, वास्तोष्पति, द्वारलक्ष्मी, गुरु एवं सरस्वती- ये द्वारदेवता पूज्य हैं।

**आधारशंखे कूर्मं च शेषं सवासुकिम्।**
**सुधार्णवं शतद्वीपं कल्पवृक्षं मणिमण्डपम्॥**

आधारशंख में कूर्म, वासुकि, क्षीरसमुद्र, शतद्वीप, कल्पवृक्ष तथा मणिमण्डप की पूजा करें।

**अश्वं विमानं सिंहासनम्। आरक्तपद्मं धर्मादि च सत्त्वादिस्वं च। अर्द्धचन्द्राग्निविमलोत्कर्षिणीक्रियायोगा ईशानाः प्रसिद्धसत्त्वा। ईशानाय सर्वात्मने योगपीठात्मने नमः।**

अश्व, विमान, सिंहासन लालकमल, धर्मादि पीठ, और सत्त्वादि की भी पूजा करें। अर्द्धचन्द्र, अग्नि, विमला उत्कर्षिणी, एवं क्रियायोग ईशान कोण के प्रख्यात सत्त्व हैं। इस ईशान कोण के योगपीठ को प्रणाम।

**यजामहे स्वरामों ह्रीं आत्मना संव्यवस्थितौ।**
**ससीताय रामाय वषट् नेत्रत्रयाय च॥**
**रां रामाय नमो राममर्चयेन्मनुना ततः।**
**ह्रीमाद्यं च सीतायै स्वाहान्तोऽयं षडक्षरः॥**
**ॐ मन्त्रस्वरूपाय नमो ज्योतिषेन्द्राय नमः।**
**आत्मान्तरात्ममनसोत्पत्यै ज्ञानात्मने नमः॥**

अपने को व्यवस्थित करते हुए ससीताय रामाय यजामहे, नेत्रत्रयाय वषट्, रां रामाय नमः इन मन्त्रों से राम की पूजा करनी चाहिए। ह्रीं सीतायै स्वाहा यह छह अक्षरोंवाला सीता का मन्त्र है।

ॐ मन्त्रस्वरूपाय ज्योतिषेन्द्राय नमः। आत्मान्तरात्ममनसोत्पत्यै ज्ञानात्मने नमः, इन मन्त्रों से फी पूजा करनी चाहिए।

**आग्नेयात्प्रभृति प्रतिष्ठायै विद्यायै ईशान्यै वासुदेवाय संकर्षणाय प्रद्युम्नायानिरुद्धाय शान्त्यै प्रकृत्यै रत्यै प्रीत्यै नमः।**

आग्नेयकोण से आरम्भ कर प्रतिष्ठा, विद्या, ईशाना, वासुदेव, संकर्षण प्रद्युम्न, अनिरुद्ध, शान्ति प्रकृति, रति तथा पीति को प्रमाण करना चाहिए।

**अग्रे हनूमान्, जाम्बवान्, सुग्रीव, विभीषण, अङ्गद, शत्रुघ्न, धृष्टि जय विजय राष्ट्र सुराष्ट्र वर्द्धन अशोक सुमन्त द्वारपालाः वामरूपाः।**

आगे में हनुमान्, जाम्बवान्, सुग्रीव, विभीषण, अङ्गद, शत्रुघ्न, धृष्टि, जय, विजय, राष्ट्र, सुराष्ट्र, वर्द्धन, अशोक एवं सुमन्त- ये द्वारपालगण श्रीराम के ही रूप हैं।

**वज्र शक्ति दण्ड खड्ग पाश गदा त्रिशूल अम्बुज चक्र एतान्यस्त्राणि।**

वज्र, शक्ति, दण्ड, खड्ग, पाश, गदा, त्रिशूल, अम्बुज, चक्र, ये श्रीराम के अस्त्र-शस्त्र हैं।

**वसिष्ठ वामदेव गौतम नल नील गवय गवाक्ष गन्धमादन शरभ मैन्द द्विविदादयः।**

वसिष्ठ, वामदेव, गौतम, नल, नील, गवय, गवाक्ष, गन्धमादन, शरभ, मैन्द, द्विविद आदि परिकर हैं।

**शङ्खचक्रगदापद्मशार्ङ्गबाणगरुडविष्वक्सेन एते विष्णुरूपाः सर्वस्मै विष्णुरूपाय नमः।**

शङ्ख, चक्र, गदा, पद्म, शार्ङ्ग, बाण, गरुड, विष्वक्सेन, ये विष्णु के स्वरूप हैं, इन सबको विष्णु रूप में प्रणाम।

**ज्योतिषे विष्णुरूपिणे।**
**मनोवाक्कायजनितं कर्म यच्च शुभाशुभम्।**
**तत्सर्वं भूतये भूयान्नमो रामाय देहिने।**

मनुष्य के रूप में शरीर धारी श्रीराम को प्रणाम। मन, वाणी, शरीर आदि से उत्पन्न जो शुभाशुभ कर्म हैं, वे सभी, ऐश्वर्य के लिए हों।

**एतद्रहस्यं परमं प्रत्यूषःसु समासतः।**
**यः पठेद्राममाहात्म्यं विद्यैश्वर्यनिधिर्भवेत्।।**
**ऋणध्वंसश्च सौभाग्यं दारिद्र्यञ्च निकृन्तयेत्।**
**उपद्रवाँश्च शमयेत् सर्वलोकं वशं नयेत्।।**
**यः पठेत्प्रातरुत्थाय धर्मार्पणधिया सदा।**
**स याति परमं ब्रह्म पुनरावृत्तिवर्जितम्।।**

इस परम रहस्य श्रीराम के माहात्म्य का प्रत्येक दिन उषःकाल में जो संक्षेप में भी पाठ करते हैं, वे विद्या एवं ऐश्वर्य के खान हो जाते हैं। उनकें ऋण ध्वस्त होते हैं, सौभाग्य का उदय होता है और दरिद्रता कट जाती है। सभी प्रकार के उपद्रव शान्त हो जाते हैं और वह व्यक्ति सभी लोगों को अपने वश में कर लेता है। जो प्रातःकाल उठकर धर्म को अर्पित करने की बुद्धि से इसका पाठ करते हैं, वे पुनर्जन्म से मुक्त होकर ब्रह्मलोक को जाते हैं।

**इत्यगस्त्यसंहितोक्ता रामनवमीकथा समाप्ता।**

यह अगस्त्य-संहिता में प्रतिपादित रामनवमी व्रतकथा पूर्ण हुई।

**ॐ यदक्षरपदभ्रष्टं मात्राहीनं तु यद् भवेत्।**
**तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते।।**

**ॐ नमः ससीतारामलक्ष्मणाभ्याम्।**